# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

## THE ASIATIC SOCIETY OF BENGAL.

---

New Series.—No. 844.

## THE TATTVA-CHINTĀMAṆI

BY

GANGES'A UPĀDHYĀYA.

---

## PART III.

UPAMĀNA KHAṆḌA

WITH THE COMMENTARY OF

KRIṢṆAKĀNTA VIDYĀVĀGĪÇA

EDITED BY

PAṆḌIT KĀMĀKHYĀ NĀTHA TARKA-VĀGIS'A,

*Professor, Sanskrit College, Calcutta.*

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

1897.

# तत्त्वचिन्तामणौ

# उपमानखण्डं ।

## श्रीमद्गङ्गेशोपाध्यायविरचितं ।

श्रीकृष्णकान्तविद्यावागीशविरचितदीपन्याख्यटीकासहितं ।

आसियाटीक-सोसाइटी-समाजानुमत्या

संस्कृतविद्यालयाध्यापक-

**श्रीकामाख्यानाथ-तर्कवागीशेन**

परिशोधितं ।

कलिकाताराजधान्यां

वाप्तिस्त मिशनयन्त्रे मुद्रितं ।

शकाब्दाः १८१६ । ई० १८९४ ।

ॐ गणेशाय नमः ।

# तत्त्वचिन्तामणौ ।

## उपमानाख्यतृतीयखण्डं ।

अथोपमानं निरूप्यते,(१) तच्च सादृश्यप्रमाकरण-

---

## उपमानाख्यतृतीयखण्डदीपनी ।

श्रीकृष्णचरणाम्भोजद्वन्द्वं स्वान्ते निधापयन् ।
तनोति श्रीकृष्णकान्तस्तृतीयमणिदीपनीं ॥

तृतीयचिन्तामणिदीपनी स्वयं
निहन्तु विद्वद्गणसंशयात्मकं ।
तमिस्रमेषा निविड़ं हृदिस्था
यथा दिनेशो वहिरन्धकारं(२) ॥

---

(१) मथुरानाथप्रणीताया उपमानखण्डव्याख्याया दुर्लभत्वात् व्याख्यासह-कारं विना चिन्तामणिग्रन्थस्य दुर्बोधत्वाच्च जगदीशसर्वस्वशब्दशक्ति-प्रकाशिकाव्याख्याकृत्कृष्णकान्तभट्टाचार्य्यप्रणीतव्याख्यया सहितमुपमा-नाख्यतृतीयखण्डं प्रकाशितमिति ।

(२) एषा तृतीयचिन्तामणिदीपनी हृदिस्था सती विद्वद्गणसंशयात्मकं निविड़ं गाढ़ं तमिस्रं अन्धकारं बहिरन्धकारं दिनेश इव निहन्तु विनाशयतु इति समुदितार्थः ।

तृतीयचिन्तामणिमाथुरी पुनः
सुदुर्लभाऽऽतेति परिश्रमो मम ।
अत्यन्तयत्नैर्मिलितापि सत्पथ-
प्रकाशिनी नेति मतिर्नियोजिका ॥
श्रीकृष्णकान्तवचनं तत्त्वज्ञानफलप्रदं ।
विहाय माथुरीचिन्ता क्रियते सूरिभिः कथं ॥

लक्षण-स्वरूप-प्रामाण्यादिप्रकारेणानुमानं निरूप्य शिष्यशुश्रूषार्थमुपमाननिरूपणं प्रतिजानीते, 'अथेति अनुमाननिरूपणानन्तरमित्यर्थः । यद्यपि ग्रन्थलाघवार्थमनुमाननिरूपणप्रागेवानुमानोपमानयोरवसरसङ्गतिः प्रदर्शिता[१] इति पुनस्तत्प्रदर्शनमनुचितं[२] तथापि उपमाननिरूपणेऽनुमाननिरूपणानन्तर्य्यानभिधाने उपमानस्यानुमानान्तर्गतत्वसन्देहेन समस्तचिन्तामणिग्रन्थाध्ययनाधीनफलार्थिनोऽधीतप्रत्यक्षादिपरिच्छेदद्वयस्य उपमानाकाङ्क्षायां निवृत्तिः स्यात् विशिष्य शुश्रूषापि न स्यादिति तदभिधानं । न च केवलात् 'उपमानं निरूप्यते' इति प्रतिज्ञावाक्यादेव प्रतिज्ञान्तरावगमात् अर्थत-एवानुमानपरिच्छेदसमाप्तिज्ञाने उपमानस्यानुमानान्तर्गतत्वाभावनिश्चयात् कुतस्तत्संशय इति वाच्यं । तथापि प्रतिज्ञेयं अनुमानविशेषनिरूपणविषयिणी न वा इति संशयेन तादृशसंशयोत्पादे

---

(१) तथाच अनुमानापेक्षया प्राथमिकजिज्ञासाविषयत्वप्रयोजकवक्ङवादिसम्मतत्वकथनेन विरोधीभूतानुमानजिज्ञासाया विषयसिद्धा निवृत्तौ सत्यामुपमानं निरूपणीयमिति सूचनात् अवसरसङ्गतिः प्रदर्शितेति भावः ।

(२) अथेत्यादिग्रन्थेन पुनः सङ्गतिप्रदर्शनमनुचितमित्यर्थः ।

बाधकाभावात्। आनन्तर्य्याभिधाने तु अनुमानपरिच्छेदसमाप्ति-ज्ञानात् उपमानेऽनुमानानन्तर्गतत्वनिश्चयेन तादृशसंशयानुत्पत्तेः। एवं 'अथ'शब्दस्य मङ्गलवाचितया ग्रन्थारम्भे मङ्गलवाचकशब्दाभि-धानस्य ग्रन्थकर्त्तृणां रीतिसिद्धतयापि तदभिधानं।

मिश्रास्तु 'अथ'शब्देनैवात्रावसरसङ्गतिः प्रदर्शिता। अनुमानग्रन्थे तादृशपाठस्तु काल्पनिकः। न च स्वरूपसत्याः सङ्गतेरपेक्षितत्वेऽपि तत्प्रदर्शनमफलं इति वाच्यं। अनुमानग्रन्थ एव सङ्गतिप्रदर्शन-प्रति-ज्ञाफलयोर्दर्शितत्वात् अत्रापि तयोरेव तत्फलत्वात् इति वदन्ति।

अपरे तु 'उपमानं निरूप्यते' इत्येवात्र पाठः। 'अथ'शब्दस्तु काल्पनिकः किं तदर्थविवेचनया इत्याहुः। एतन्मतद्वयमेव न साधु सकलतान्त्रिकसिद्धपाठानामपलापापत्तेः।

अन्ये तु 'अथ'शब्दोऽत्र नानन्तर्य्यार्थकः परन्तु तस्य मङ्गलवाचितायाः "अथ स्यान्मङ्गले प्रश्ने" इत्यादि कोषसिद्धतया ग्रन्थादौ मङ्गलवा-चकशब्दप्रयोगस्य ग्रन्थकारीयरीतिसिद्धतयैव तदभिधानमित्याहुः। तदप्यसत् आनन्तर्य्यानभिधाने दत्तदोषस्यैव जागरूकत्वात्।

लटा वर्त्तमानकृतिसाध्यत्वप्रतिपादनात् वर्त्तमानकृतिसाध्यनिरू-पणविषय उपमानमिति प्रतिज्ञार्थः। उपमानपदस्य भावकरण-व्युत्पत्त्या उपमिति-तत्करणोभयपरतया उभयोरेव प्रतिज्ञातत्वेन अग्रे उपमितिनिरूपणस्य नार्थान्तरत्वमित्यवधेयं। सादृश्यस्याति-रिक्तपदार्थतावादिनां मीमांसकानां मतमुपन्यस्यति, 'तत्रे'त्यादिना 'इत्यतिरिक्तं सादृश्यमित्यन्तेन'(१)। 'तत्र' उपमाननिरूपणे, सप्तम्यर्थो

(१) इत्यधिकं सादृश्यमित्यन्तेनेति स्वचिह्नितपुस्तकपाठः, एतादृशपाठेन कस्यचिन्मूलपुस्तकस्य तादृशः पाठोऽनुमीयते।

घटकत्वं विषयत्वं वा, तथाचोपमाननिरूपणस्य घटकं विषयो वा
यदुपमानं तत् सादृश्यप्रमाकरणस्वरूपमिति योजना। 'सादृश्ये-
त्यादि किञ्चित्पदशक्यतावच्छेदकत्वावगाहिनी या सादृश्यावच्छिन्न-
विशेष्यक-यत्किञ्चित्पदशक्यत्वप्रकारिका प्रमा तत्करणमित्यर्थः,
तेषां मते गोसदृशो गवयपदवाच्य इत्याकारिकैवोपमितिः, न तु
गवयो गवयपदवाच्य इत्याकारिका, सादृश्यस्यातिरिक्ततया गवय-
त्वजात्यपेक्षया अगुरुत्वेन तस्यैव गवयपदप्रवृत्तिनिमित्ततया उप-
मितौ पारतन्त्र्येण सादृश्ये शक्यतावच्छेदकत्वभानेन तस्यास्तदव-
गाहित्वं तादृशप्रमाकरणस्योपमानरूपप्रमाणत्वाभिधानेनैव तादृश-
प्रमाया उपमितित्वमर्थत एवावगम्यते। प्रमात्वन्तु प्रकृते ज्ञानत्वमेव
न तु तद्वति तत्प्रकारकत्वरूपं तन्निवेशे प्रयोजनाभावात्। न च
प्रमात्वाभिधानमसङ्गतं ज्ञानत्वाभिधानस्यैव सम्यक्त्वात् इति वाच्यं
सूत्रे प्रमाणपदश्रवणात् 'प्रमाणतत्त्वमत्र विविच्यते' इत्यनेन प्रमाण-
निरूपणस्य प्रतिज्ञातत्वाच्च प्रमाकरणस्यैव प्रमाणत्वात् प्रमात्वाभि-
धानात्। ननु गोसदृशं द्रव्यं सादृश्यं गवयपदशक्यतावच्छेदकमिति
स्मृतिकरणेऽनुभवेऽतिव्याप्तिवारणाय प्रमात्वनिवेशनमावश्यकं स्मृते-
र्गृहीतग्राहित्वेन तेषां मतेऽप्रमात्वादिति चेत्, न। तथापि तादृ-
शानुमितिकरणेऽतिव्याप्तेर्दुर्वारत्वात् अतः शक्यत्वप्रकारतानिरूपित-
विशेष्यतावच्छेदकत्वावच्छिन्नविशेष्यतानिरूपितशक्यतावच्छेदकत्वप्र-
कारताया निवेश्यतया अतिव्याप्तिविरहात् अनुमितौ पारतन्त्र्येण
भानास्वीकारात्। न च तथापि तादृशप्रत्यक्षादिकरणेऽतिव्याप्ति-
रिति वाच्यं। तादृशविषयतानियतधर्मावच्छिन्नकार्य्यतानिरूपित-

कारणताया लक्षणघटकत्वात् प्रत्यक्षत्वादेस्तादृशविषयतानियतत्वा-भावात् । तादृशप्रमाकरणञ्च सादृश्यविशिष्टपिण्डप्रत्यक्षमिति साम्प्रदायिकाः ।

नव्यास्तु सादृश्यप्रमा करणं यस्येतिव्युत्पत्त्या सादृश्यप्रमाजन्यत्व-लाभः, 'उपमानं' उपमितिः, 'प्रमात्वं' ज्ञानत्वमेव, लौकिकप्रत्यक्षत्वं वा, तथाच सादृश्यप्रकारकलौकिकप्रत्यक्षजन्यज्ञानमुपमितिरिति पर्य्यवसितार्थः । न चैवमुपमानप्रमाणानिरूपणे अर्थान्तरं न्यूनत्वं वा इति वाच्यं । सादृश्यप्रमाकरणतानिरूपकत्वस्य उपमितौ ज्ञानकाले तुल्यवित्तिवेद्यतया उपमितिनिरूपितकरणताया अपि तादृश-प्रमायां ग्रहात् तस्यैव तल्लक्षणत्वमित्यर्थतो लाभात्, तथाच तादृश-प्रत्यक्षकरणतानिरूपकज्ञानकरणज्ञानत्वं उपमानप्रमाणलक्षणं पर्य्य-वसितं, तादृशप्रत्यक्षकरणतानिरूपकज्ञानत्वमेवोपमितिलक्षणं, तादृ-शप्रत्यक्षानुव्यवसाये उपमानलक्षणस्य उपमित्यनुव्यवसाये उपमिति-लक्षणस्य अतिव्याप्तिवारणाय कारणतामुपेक्ष्य करणतानिवेशः, करणतानिरूपकत्वञ्च तादृशप्रत्यक्षजन्यव्यापारजन्यत्वे सति तादृश-प्रत्यक्षजन्यत्वं तत्र विशेष्यदलनिवेशे प्रयोजनाभावात् सत्यन्तमेव लक्षणे निवेश्यं, तादृशज्ञानकरणत्वञ्च तादृशज्ञानजनकव्यापारजनकत्वं अतो न विशेषणज्ञानादावुपमानलक्षणातिव्याप्तिः इति वदन्ति ।

वस्तुतस्तु सादृश्यप्रमा क्रियते येन इति व्युत्पत्त्या तादृशप्रमा-प्रयोजकमित्यर्थः, प्रमितसादृश्यनिरूपकमिति पर्य्यवसितं, तच्च गव-यादिनिष्ठं सादृश्यं निरूपकं गवादि अतएव गवयस्योपमानं गौः गोरुपमेयो गवय इति व्यवह्रियते लोकैः, तथाहि गवयपदोत्तर-

षष्ठ्या विशेष्यत्वमर्थः, उपपूर्व्वकमाधातोश्च सादृश्यप्रकारकप्रमाऽर्थः, तथाच गवयविशेष्यकसादृश्यप्रकारकप्रमानिरूपको गौरिति तदर्थः, गोरुपमेयो गवय इत्यस्य तु गोरिति षष्ठ्यर्थानिरूपितत्वं तथाच गोनिरूपितसादृश्यप्रकारकप्रमाविषयो गवय इत्यर्थः। अश्वस्योपमानं गौः गोरुपमेयोऽश्व इति व्यवहारवारणाय धात्वर्थे प्रमात्वान्तर्भावः, अतएव लक्षणेऽपि तन्निवेशितं, अन्यथा तादृशव्यवहारापत्तिः। उपमितिस्तु सादृश्यप्रमैव, तादृशप्रमात्वन्तु तल्लक्षणमिति तु परमार्थः।

अपरे तु गवादिज्ञानमेव उपमानं लक्षणन्तु सादृश्यप्रकारकप्रमाकरणत्वं। न च गवादिज्ञाने सादृश्यप्रमाकरणत्वं बाधितमिति वाच्यं। सादृश्यविशिष्टबुद्धौ सादृश्यज्ञानस्य विशेषणज्ञानविधया हेतुत्वात् तत्र च गोज्ञानस्य हेतुत्वात् निरूप्यज्ञाने निरूपकज्ञानस्य हेतुताया औत्सर्गिकत्वादिति यथाश्रुतमेव सम्यक् इत्याहुः। तन्मन्दं तत्र तत्करणताया असिद्धत्वात्, यदि तज्जनकजनकत्वमेव तत्करणत्वं तथापि गवयस्योपमानं गौरित्यादिव्यवहारानुपपत्तिः सादृश्यप्रमाया धात्वर्थत्वेन गवादौ तदन्वयबाधात् स्वजनकज्ञानजनकज्ञानविषयतासम्बन्धेन तत्र तदन्वये तादृशसम्बन्धस्य वृत्त्यनियामकतया अश्वो न गवयस्योपमानं इत्यत्र शाब्दबोधानुपपत्तेः सादृश्यप्रकारकज्ञानजनकज्ञानस्य लक्षणया धात्वर्थत्वे तु गोरुपमेयो गवय इत्यादौ शाब्दानुत्पत्तेरवारणात् तत्र ज्ञानजन्यज्ञानजन्यसादृश्यप्रमाया धात्वर्थत्वे ज्ञानजन्यज्ञानजन्यत्वस्य षष्ठ्यर्थत्वे वा लक्षणास्वीकारापत्तेः नानाव्युत्पत्तिस्वीकारप्रसङ्गात् तादृशसम्बन्धेन गोरन्वये तु नञ्समभिव्याहारस्थले तदसम्भवात्। वयन्तु गोविशेष्यकगवयसादृश्यप्रका-

मुपमानमिति केचित्। सादृश्यञ्च पदार्थान्तरम्, तथाहि। सादृश्यव्यवहारादबाधितादस्ति[१] सादृश्यं,

---

रकप्रमाकरणमित्यर्थः, तच्च गवयविशेष्यकगोसादृश्यज्ञानं प्रत्यक्षादिरूपं अतिदेशवाक्यार्थस्मृतिरूपव्यापारद्वारा तज्जन्यं गोविशेष्यकगवयसादृश्यज्ञानमुपमितिरित्यर्थाल्लभ्यते इति वदामः ।

ननु सादृश्यस्यानुगतस्याभावात् एकविधसादृश्यनिवेशे अन्योपमानेऽव्याप्तिः साम्प्रदायिकमते सादृश्यस्य स्वरूपतोऽभानात् गवयत्वमुपेक्ष्य तत्र शक्यतावच्छेदकत्वकल्पने गौरवञ्च इत्यत आह, 'सादृश्यञ्चेति, 'पदार्थान्तरं' अतिरिक्तपदार्थः, तथाच सोऽनुगतः स्वरूपतो भातोऽपि इति नानुपपत्तिरिति भावः। ननु तस्यातिरिक्तपदार्थत्वे किं मानमित्याकाङ्क्षायां तस्य तथात्वे युक्तिमाह, 'तथाहीति, 'तथाहि' सादृश्यस्यातिरिक्तपदार्थतां जानीहि इत्यर्थः, तत्रादौ सादृश्यमेव प्रमाणयति, 'सादृश्यव्यवहारादिति, धर्म्यसिद्धौ धर्म्मविवेचनाया उन्मत्ततासम्पादकत्वादिति भावः। बाधितव्यवहारस्याप्रमाणत्वेन वस्तुसाधकत्वादाह, 'अबाधितादिति। अथाबाधितत्वं न भ्रमसामान्यभिन्नज्ञानजनकत्वं तन्मते भ्रमाप्रसिद्धेः। नापि प्रमाजनकत्वं, भ्रमस्यापि किञ्चिदंशे प्रमात्वसम्भवात्। नापि सन्मात्रविषयकज्ञानजनकत्वं, मात्रार्थाप्रसिद्धेः। अत एवासद्विषयकान्यज्ञानजनकत्वमित्यपि न, असतोऽप्रसिद्धेरिति चेत्, सन्निरूपितं

---

(१) सदृशव्यवहारादबाधितादस्तीति ख० ।

**तच्च न प्रतिपदार्थमेकं सर्वस्य सर्वसदृशत्वापत्तेः सुसदृश-**
**मन्दसदृशव्यवहारस्य तदेकत्वेऽनुपपत्तेश्च। न च व्यञ्ज-**
**कभूयःसामान्याल्पत्व-भूयस्त्वाभ्यां तद्धीरिति वाच्यं।**

---

यावत्स्वविषयिताकत्वं स्वविषयितात्वव्यापकसन्निरूपितत्वकत्वमिति
यावत्, इति साम्प्रदायिकाः तन्न, बाधितव्यवहारस्यापि तथात्वात्।
वस्तुतस्तु धर्म्म-धर्म्मिसाकाङ्क्षवैशिष्ट्यानवगाहिज्ञानसामान्यभिन्नज्ञान-
जनकत्वं तत्। अबाधितत्वमनिवार्य्यत्वमित्यपि कश्चित्। सादृश्यत्व-
स्यानुगतत्वादेव तस्यानुगतत्वं न त्वेकत्वादित्याह, 'तच्चेति सादृश्यञ्चे-
त्यर्थः। ननु तस्यैकत्वे का क्षतिरित्याकाङ्क्षायामाह, 'सर्व्वस्येत्यादि,
तथाच गवयनिष्ठगोसादृश्यस्य खरनिष्ठाश्वसादृश्याभिन्नतया गवयो-
ऽश्वसदृश-इति व्यवहारापत्तिरिति भावः।

ननु सादृश्यस्य एकत्वेऽपि अश्वनिरूपितत्वविशिष्टसादृश्याधि-
करणताया गवये बाधान्न तथा व्यवहारः अश्वसादृश्यं गवयवृत्ति
इति व्यवहारस्य दुष्टत्वादित्यतो दोषान्तरमाह, 'सुसदृशेति, 'तदेकत्वे'
सादृश्यस्यैकत्वे, 'अनुपपत्तेरिति, तद्गतभूयोधर्म्मवति यत्सादृश्यं तत्
सुसादृश्यं तद्गताल्पधर्म्मवति यत्सादृश्यं तन्मन्दसादृश्यं यथा गोसदृशो
गवयः अश्वसदृशः पीतगौरित्यादौ तस्यैकत्वे तन्नोपपद्यते विरुद्धयोः
शोभनत्व-मन्दत्वयोरेकत्रासम्भवात् इति भावः। शङ्कते, 'न चेति
सादृश्यज्ञानजनकज्ञानविषयाणां सादृश्यनियतानां वा भूयसां साधा-
रणधर्म्माणां अल्पत्व-बहुत्वज्ञानाभ्यामित्यर्थः, 'तद्धीरिति सुसदृशत्व-
मन्दसदृशत्वधीर्यत इति व्युत्पत्त्या तद्व्यवहार इत्यर्थः, तथाच तयोः

बहुभिरल्पैश्च व्यज्यमानघटादौ ह्रास-वृद्ध्योरदर्शनात् व्यञ्जकाभिमतादेव व्यवहारसिद्धौ अतिरिक्तासिद्धेश्च । नापि संयोगवत् व्यासज्यवृत्त्यनेकम्, गोत्वोपलक्षित-सादृश्याश्रयत्वात् गवयवत् गोरपि सुसदृशत्वप्रसङ्गात् गोरसन्निकर्षे संयोगवदप्रत्यक्षत्वप्रसङ्गाच्च । प्रत्यक्षत्वे वा

---

कालिकाव्याप्यवृत्तितया एकस्मिन् समावेशसम्भवादिति भावः । शङ्कां निरस्यति, 'बहुभिरित्यादि, 'घटादौ' घटादिनिष्ठसादृश्ये इत्यर्थः, घटादिरादिराश्रयो यस्येति व्युत्पत्तेः, 'ह्रासवृद्ध्योः' व्यञ्जकानामल्पत्व-बहुत्वयोः, 'अदर्शनात्' सर्व्वत्र ज्ञातुमशक्यत्वात् तथाच यत्र तादृशज्ञानं नास्ति तत्र तादृशव्यवहारो न स्यादिति भावः । ननु यत्र तादृशज्ञानं नास्ति तत्र तादृशव्यवहार एव नेत्यतो दोषान्तरमाह, 'व्यञ्जकाभिमतादेवेति, तद्गतभूयःसाधारणधर्म्मादेवेत्यर्थः, 'व्यवहारसिद्धौ' सादृश्यव्यवहारोपपत्तौ, 'अतिरिक्तासिद्धेः, तस्यातिरिक्तपदार्थत्वासिद्धेः, व्यवहारस्यैव तत्कल्पकत्वादिति भावः ।

पुनः शङ्कते, 'नापीति,'व्यासज्यवृत्ति' उभयवृत्तीत्यर्थः, 'अनेकमिति, एकत्वे उक्तदोषतादवस्थ्यादिति भावः। गोत्वविशिष्टसादृश्यस्य गवये बाधात् 'गोत्वोपलक्षितेति फलितं, 'सुसदृशत्वप्रसङ्गादिति तथाच गोसदृशो गौरिति व्यवहारप्रसङ्गादित्यर्थः । ननु स्वनिरूपितत्वविशिष्टसंयोगस्येव स्वनिरूपितत्वविशिष्टसादृश्यस्य स्वस्मिन् बाधान्न तथा व्यवहार इत्यत आह, 'गोरसन्निकर्षे इति, 'अप्रत्यक्षत्वप्रसङ्गात्'

गवयनिरूपितसादृश्यस्यैकवित्तिवेद्यत्वेन गोनिष्ठतया

---

तद्विषयकलौकिकप्रत्यक्षाभावप्रसङ्गात्, निरूप्यसाक्षात्कारस्य निरूपकसाक्षात्काराधीनत्वादिति भावः। ननु सादृश्यस्य सामान्यादिगतत्वेनासमवेतत्वात् लौकिकसन्निकर्षाभावेन न लौकिकप्रत्यक्षविषयत्वं किन्त्वलौकिकप्रत्यक्षविषयत्वमेवातोनोक्तदोष इत्यत आह, 'प्रत्यक्षत्वे वेति, अलौकिकप्रत्यक्षमात्रनिरूपितविषयत्वे वेत्यर्थः। 'एकवित्तिवेद्यत्वेन' तज्ज्ञानरूपैकोपनयसन्निकर्षवेद्यत्वेन, 'चाक्षुषत्वप्रसङ्ग' इति उपनीतचाक्षुषविषयत्वप्रसङ्ग इत्यर्थः, उपनीतप्रत्यक्षे विशेष्यविशेषणभावस्य कामचारादिति भावः। इति साम्प्रदायिकाः।

वस्तुतस्तु ननु निरूप्यसाक्षात्कारे निरूपकसाक्षात्कारस्य हेतुत्वे मानाभावः गगनसंयुक्तो घट इत्यादिसंयोगसाक्षात्कारे व्यभिचारात् परन्तु सम्बन्धसाक्षात्कारे सम्बन्धिनोरेकतरसाक्षात्कारस्यापि सम्बन्धिसाक्षात्कारत्वेन हेतुत्वं घटसंयोगि गगनमिति साक्षात्कारस्य सन्निकर्षाभावादेव वारणसम्भवादित्यत आह, 'प्रत्यक्षत्वे वेति गोरसन्निकर्षदशायमपि गोसादृश्यस्य लौकिकप्रत्यक्षविषयत्वे वा इत्यर्थः, स्वीकृते इति शेषः, 'एकवित्तिवेद्यत्वेन' एकसामग्रीग्राह्यत्वेन गो-गवयसन्निकर्षदशायां यादृशसामग्रीतो गवये गोसादृश्यग्रहः गवि गवयसादृश्यग्राहिका तादृशसामग्र्येव इति नियमतो द्विविधविषयकचाक्षुषप्रसङ्ग इत्यर्थः। 'अथवा एकवित्तिवेद्यत्वेन' एकज्ञानविषयत्वेन, नियमत इत्यादिः, अभेदे तृतीया, तथाच तादृशविषयत्वाभिन्नचाक्षुषविषयत्वप्रसङ्ग इत्यर्थः, सामग्र्या अविशेषादिति भावः। इति

चाक्षुषत्वप्रसङ्गः, किन्तु प्रत्याश्रयं भिन्नम् । न चैकैकस्य व्यभिचारादनुगतरूपाभावाच्चानुगतप्रत्ययः सादृश्यपदव्युत्पत्तिश्च न स्यादिति वाच्यं । अनुगताकारवि-

---

तु सारं, इदमापातत उभयसादृश्यभासकसामग्रीसद्भावे एकज्ञानविषयत्वमिष्टमेव, न हि बाधाभावादिघटितसामग्र्योरैक्यं सम्भवति, अन्यथा सिद्धान्तिमतेऽप्यनिस्तारात् । अतएव एतत्कल्पेऽनिर्भरसूचनायैव वाशब्द उक्त इत्यप्यन्ये । तदा किमित्याकाङ्क्षायामाह, 'प्रत्याश्रयमिति, 'भिन्नमिति, तथाच न पूर्व्वोक्तदोषाणामवकाश इति भावः । 'न चेति 'वाच्यमिति परेणान्वयः, 'एकैकस्य' गवय-महिषादिनिष्ठस्य गोसादृश्यस्य, 'व्यभिचारात्' अयं गोसदृश इति प्रतीतिविषयनिष्ठभेदप्रतियोगितावच्छेदकत्वात् । ननु सादृश्यानां प्रत्याश्रयभिन्नत्वेऽपि सादृश्यवृत्त्यनुगतधर्म्मादिवानुगतप्रत्ययः पदव्युत्पत्तिश्च स्यादित्यत आह, 'अनुगतरूपाभावाच्चेति, अनुगतप्रत्ययाभावे कदाचिदिष्टापत्तिसम्भवात् पदव्युत्पत्तिपर्य्यन्तानुधावनं, गोसादृश्यानामननुगमे सदृशपदजन्यबोधविषयतावच्छेदकत्वावच्छिन्नशक्तविषयतारूपा पदशक्तिर्न स्यादित्यर्थः, यथाश्रुतन्तु न सङ्गच्छते सादृश्येत्यस्य वाक्यत्वेन पदत्वाभावात् । सादृश्यानां तद्वृत्तिधर्म्माणाञ्चाननुगमे आनन्त्यभयेन सादृश्यपदस्य सादृश्यविशिष्टे शक्तिकल्पनाऽसम्भवात् पदाशक्यत्वेन सादृश्यमलीकं स्यात् कथञ्चित्तदादिपदशक्यत्वेऽपि सदृशपदाबोध्यत्वप्रसङ्गस्य दुर्व्वारत्वमिति भावः । शङ्कां निरस्यति, 'अनुगताकारेति, पञ्चम्यन्तत्रयं 'तयोरुपपत्तेरित्यत्रान्वितं, सादृश्यत्वेऽनुगताकारवित्ति-

त्तिवेद्यसादृश्यत्वसामान्यात् सप्तपदार्थातिरिक्तत्वाद्वा जातिवदन्त्यविशेषवच्च स्वलक्षणाद्वा[१] तयोरुपपत्तेः ।

---

वेद्यत्वकथनेन तस्यानुगमे प्रमाणं प्रदर्शितं तथाच सादृश्यत्वमनुगतं अनुगतप्रतीतिविषयत्वात् घटत्ववत् विषयानुगमं विना प्रतीत्यनुगमासम्भवात् इत्यनुकूलतर्कसहितमनुमानमेव तत्र प्रमाणमिति भावः । 'सामान्यात्' सामान्यधर्मात् । ननु किं नाम सादृश्यत्वं न जातिरसमवेतत्वात् समवेतत्वेऽपि स्वरूपतोऽप्रकारत्वात्, नाप्यखण्डोपाधिस्तत एव, किन्तु स्वरूपसम्बन्धविशेष इति तस्यापि नानात्वं दुर्व्वारं उक्तानुमानस्य बाधदूषणग्रस्तत्वादित्यत आह, 'सप्तेति, तथाच सप्तपदार्थभिन्नत्वमेव सादृश्यत्वं तादृशभेदस्यैकत्वेन सकलसादृश्यवृत्तित्वेन चानुगतत्वात् इति भावः । ननु सप्तपदार्थभिन्नत्वमेव तत्रासिद्धं प्रमाणाभावात् अत आह, 'जातिवदिति जातौ यथा स्वलक्षणात् स्वात्मकव्यावर्त्तकधर्म्मात् तयोरुपपत्तिस्तथेत्यर्थः, एवमग्रेऽपि, जातित्वस्य स्वरूपसम्बन्धरूपतया जातिरूपत्वेऽपि यत्त्व-तत्त्ववत् यथानुगतत्वं तथा इति पर्य्यवसितं, तथाच नानात्वेऽप्यनुगतत्वं भवतापि स्वीकार्य्यमिति सादृश्यत्वस्य स्वरूपसम्बन्धरूपत्वेऽनुगतत्वं दुरपवादमेवेति भावः । ननु जातित्वं ध्वंसाप्रतियोगित्वे सत्यनेकवृत्तित्वं, अनेकत्वन्तु स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टत्वं तच्चानुगतमेव यत्त्व-तत्त्वयोरनुगतत्वन्तु प्रमाणासिद्धमित्यत आह, 'अन्त्यविशेषवच्चेति पदार्थनिरूपणे योऽन्त्यः अभावपदार्थः तत्रैवेत्यर्थः, अतएव

---

(१) स्वस्मात्स्वलक्षणत्वादिति ख० ।

"न रूपं रूपवत्त्वेन क्रियावत्त्वात् न कर्म्म तत् । न शेषः समवायित्वात् तमोऽन्यद्द्रव्यमिष्यते"। इत्यत्र शेषः अभावः इत्युपायकारेण व्याख्यातं। तथाचाभावत्वमनुयोगिताविशेषः तस्य स्वरूपसम्बन्धरूपत्वेनाभावरूपतया अननुगतत्वेऽपि यथानुगतप्रत्ययादिसम्पादकं तथात्रापीति भावः। अभावत्वस्याखण्डोपाधित्वे भावभिन्नत्वस्वरूपत्वेऽप्याह, 'विशेषेति। न चासमासलिखनपरित्यागे बीजाभाव इति वाच्यं। स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वात् एतेनाभावविशेषवत्त्वेत्यनुक्त्वा अन्यविशेषवत्त्वेति कथमुक्तं इत्यनुयोगोऽपि निरस्तः। परमाणूनां व्यावर्त्तको विशेष-एव तद्व्यावर्त्तकन्तु स्वमेवानवस्थाभयात् विशेषत्वस्य स्वरूपसम्बन्धरूपत्वेन विशेषरूपत्वात् इत्यननुगतस्यापि अनुगतप्रत्ययादिसम्पादकत्वं भवतापि स्वीकार्य्यमिति भावः।

साम्प्रदायिकास्तु अवयवानामन्तः परमाणुः तन्निष्ठोऽन्त्यः, तथाच परमाणुनिष्ठविशेषवत्त्वेत्यर्थः, अतएव समासलिखनमपि सङ्गच्छते। न च परमाणुनिष्ठत्वाभिधानमनर्थकं, विशेषपदस्य व्यावर्त्तकपरत्वात् स च फलतो विशेष एव तत्र तदभिधानेन विशेषे प्रामाणिकत्वप्रतिपादनात्, तथाहि परमाणूनां परस्परभेदसिद्ध्यर्थमवश्यमेको-व्यावर्त्तकः स्वीकरणीयः अन्यथा सकलपरमाणूनामैक्यापत्तेः तथाच तेषां व्यावर्त्तनान्यथानुपपत्तिरेव तत्र प्रमाणमिति भावः। न च नित्यद्रव्यनिष्ठेति किं नोक्तमिति वाच्यं। गगनादौ शब्दादेर्व्यावर्त्तकत्वसम्भवेन तत्र विशेषानभ्युपगमेऽपि क्षत्यभावादिति भावः। शेषः पूर्व्ववदित्याहुः।

ननु सादृश्यस्यातिरिक्तत्वे किं मानं इत्याशङ्क्य तत्तत्पदार्थ-

तच्च न द्रव्यं गुणः कर्म्म वा गुण-कर्म्मवृत्तित्वात् । न च सदृशाश्रयत्वादेव[१] तत्र व्यवहारः, आश्रयवैसादृश्ये-ऽपि तत्र तत्प्रतीतेः । अत एव नाश्रयसादृश्यासंसर्गा-

---

कूटं हेतूकृत्य द्रव्यादिसमुदायभिन्नत्वं सादृश्ये साधयितुकामोऽग्रे प्रत्येकपदार्थभेदान् साधयितुमुपक्रमते, 'तच्चेति, 'तच्च' सादृश्यञ्च इत्यर्थः, 'गुण-कर्म्मवृत्तित्वात्' इति वैकल्पिकोहेतुः, तथाच गुणवृत्तित्वात् कर्म्मवृत्तित्वाच्च इत्यर्थः । न च आधेयत्वादिसम्बन्धस्य वृत्त्य-नियमेकत्वेऽपि कालिकसम्बन्धेन द्रव्यादेर्गुण-कर्म्मवृत्तित्वात् व्यभिचार इति वाच्यं । तदन्यसम्बन्धेन वृत्तित्वस्यैव हेतुत्वात् ।

केचित्तु 'वृत्तित्वात्' समवेतत्वात्, इत्याहुः, तन्मन्दं सादृश्यस्य समवेतत्वे मानाभावेन स्वरूपासिद्धेः ।

शङ्कते, 'न चेति, 'सदृशाश्रयत्वादेवेति सदृश आश्रयो यस्य इति व्युत्पत्त्या सदृशाश्रयवृत्तित्वादेवेत्यर्थः, 'तत्र' गुण-कर्म्मसादृश्य-स्थले, 'व्यवहार इति, तथाहि गोरूपसदृशं गवयरूपं गोगमनसदृशं गवयगमनमित्यादौ गोसदृशवृत्तित्वमेव विषयः तथाच सादृश्ये गुण-कर्म्मवृत्तित्वाभावादुक्तानुमाने स्वरूपासिद्धिरिति भावः। 'आश्र-यवैसादृश्येऽपि आश्रयस्य सादृश्याभावेऽपि, 'तत्प्रतीतेः' तस्य प्रतीति-र्यत इति व्युत्पत्त्या तद्व्यवहारादित्यर्थः । तथाच गोरूपसदृशमश्वरूपं इत्यादिव्यवहारो न स्यात् अश्वे गोसादृश्याभावात् इति भावः ।

---

(१) सदृशाश्रयवृत्तित्वादेवेति ख० ।

ग्रहात् सः, बाधकाभावादविशेषेण वैपरीत्यसम्भवाच्च। नापि सामान्यं, तद्धि न सर्ववृत्त्येकमनभ्युपगमात् सुसदृश-मन्दसदृशव्यवहारानुपपत्तेश्च । अथ विजातीयत्वे सत्यवयव-गुण-कर्म्मवृत्तिभूयःसामान्यं तत्, अत-

---

नन्वस्ते गोसादृश्याभावेऽपि तद्संसर्गाग्रहात्तादृशव्यवहारः स्यात् इत्याशङ्क्य निषेधति, 'अत एवेति वक्ष्यमाणदोषादेव, 'सः' तादृशव्यवहारः, 'बाधकाभावात्' गुण-कर्म्मणोः सादृश्यसत्त्वे बाधकाभावात्। ननु बाधकासत्त्वेऽपि साधकविरहादेव तयोर्न सादृश्यसिद्धिरित्यत आह, 'अविशेषेणेति साधकविरहस्य तुल्यत्वेनेत्यर्थः, 'वैपरीत्यसम्भवाच्चेति गुण-कर्म्मणोरेव सादृश्यं द्रव्ये तदभाव इति कथं न रोचयेरिति भावः। गोसदृशो गवय इत्यादिव्यवहारस्य गोरूपसदृशरूपाश्रयत्वविषयकत्वादेर्वक्तव्यतासम्भवादिति भावः। सामान्यभेदमपि तत्र साधयति, 'नापीति, 'तद्धि' सादृश्यं हि, अनभ्युपगमे हेतुमाह, 'सुदृशेत्यादि, तथाचानेकावृत्तित्वमेव तत्र सामान्यभेदसाधको हेतुरिति भावः। वस्तुतस्तु प्रत्याश्रयभिन्नत्वरूपहेतुरेव एतत्प्रतिपाद्यः अन्यथा समवायाभावयोर्भेदसाधकहेतुत्वतुल्यता न्यूनत्वापत्तेः। द्रव्यभेदसाधकहेतुनैव विशेषभेदसिद्धिः सामान्यभेदसाधकहेतुना तु समवायाभावभेदसिद्धिरिति हेत्वन्तरानुसन्धानानपेक्षणात्तन्नोक्तं।

इदानीं मीमांसकः स्वपक्षं निर्व्यूढं कृत्वा विपक्षपक्षानुपन्यस्य दूषयति, 'अथेति, तथाच स्ववृत्त्यसाधारणधर्म्मशून्यत्वे सति अवयवगुण-कर्म्मवृत्तिभूयःसाधारणधर्म्मवत्त्वं सादृश्यं इति पर्य्यवसितं,

एव दूरस्थे प्रतियोगिनि भूयःसामान्याज्ञानान्न तथा सादृश्यप्रत्ययः वनं प्रासादा इतिवत् बहुत्वस्य समुदायत्वस्य वैकक्ष्यत्वादेकं सादृश्यमिति[१] धी-प्रयोगौ अन्यथा वनाद्यपि अर्थान्तरं स्यात्, सामान्यस्य बहु-

क्वचिदवयवसाम्यात् क्वचिद्रूपादिसाम्यात् क्वचित् क्रियासाम्यात् सादृश्यप्रतीतिर्न भवति किन्तु एतत्त्रितयसाम्यादेव इति धर्म्मे वृत्तान्तविशेषणं, धर्म्मिणि तादृशधर्म्मवत्त्वं स्वाश्रयाश्रयत्वसम्बन्धेन बोध्यं तादृशैकधर्म्मवत्त्वेऽपि न सादृश्यमिति भूयस्त्वनिवेशः। एकनिष्ठासाधारणधर्म्मस्यापरत्रासम्भवात् साधारणत्वनिवेशः। अत्र युक्तिमप्याह, 'अत एवेति, सादृश्यस्य एतादृशरूपत्वादेवेत्यर्थः, 'दूरस्थे' असन्निकृष्टे, 'प्रतियोगिनि' गवादौ, 'न तथा सादृश्यप्रत्ययः' न निरुक्तसादृश्यलौकिकप्रत्यक्ष इत्यर्थः। ननु तस्य भूयःसामान्यरूपत्वे एकं सादृश्यमिति प्रत्ययो व्यवहारश्च न स्यादित्यत आह, 'वनं प्रासादा इतिवदिति, 'समुदायत्वस्य' समुदायत्वरूपस्य, 'वैकक्ष्यत्वात्' उत्पाद्यत्वात् तद्विषयत्वेनाविवक्षितत्वादिति यावत्, 'प्रयोगः' व्यवहारः, अविवक्षितत्वे दृष्टान्तः 'प्रासादा इतिवदिति, एकत्वविशिष्टवने बहुत्वविशिष्टप्रासादाभिन्नत्वान्वयासम्भवात् यथा प्रासादादेर्बहुत्वमविवक्षितं तथात्रापीति भावः।

ननु तत्र बहुत्वं विवक्षितमेव इति दृष्टान्तासिद्धिरित्यत आह, 'अन्यथेति तत्र बहुत्वस्य विवक्षितत्वे, 'अर्थान्तरं' प्रासादाभेदान्वयानिरूपकं, 'स्यादिति, एकस्मिन् बहुत्वस्य बाधितत्वादिति भावः।

(१) सामान्यमितीति ख०।

त्वाल्पत्वाभ्यां सुसदृश-मन्दसदृशव्यवहारः, तदुच्यते, "सामान्यान्येव भूयांसि गुणावयव-कर्मणाम्। भिन्न-प्रधानसामान्यव्यक्तं सादृश्यमिष्यते"॥ इति, न, साजात्येऽप्यरविन्दद्वयवत् सजातीयावयवादिशून्ये गुणादौ

---

ननु उक्तधर्म्माणां सादृश्यत्वे सुसदृश-मन्दसदृशव्यवहारो न स्यादत-स्तमप्युपपादयति, 'सामान्यस्येति, उक्तधर्म्माणां सादृश्यरूपत्वे भट्ट-कारिकामपि प्रमाणयति, 'तदुच्यत इति, तदर्थश्च 'गुणावयव-कर्म्मणां', 'भूयांसि सामान्यान्येव' अनेके साधारणधर्म्मा एव, 'भिन्नप्रधानसामान्यव्यक्तं' प्रतियोगिवृत्त्यसाधारणधर्म्मभिन्नासाधारण-धर्म्ममिलितं प्रतियोग्यवृत्त्यसाधारणधर्म्मविशिष्टमिति यावत्, तथाच तद्वृत्त्यसाधारणधर्म्मवत्त्वमेव तद्वैजात्यमिति भावः। उद्देश्य-विधेय-भावेनान्वयस्थले उद्देश्यगतलिङ्ग-सङ्ख्ययोरविवक्षितत्वात् 'इष्यते' इत्येकवचनं। दूषयति, 'नेति, 'साजात्येऽपि' वैजात्यविरहेऽपि इत्यर्थः, 'अरविन्दद्वयवत्' सदृशं पङ्कजद्वयमित्यादाविवेत्यर्थः, तथाच वैजात्यनिवेशे तत्र सादृश्यप्रत्ययो न स्यादिति भावः। ननूक्तस्थले असाधारणधर्म्मो न पद्मत्वं तस्य व्यक्त्यन्तरसाधारणत्वात् किन्त्विदन्त्व-मेव इति तत्र वैजात्यमस्त्येव इत्यतो दोषान्तरमाह, 'सजातीयेति, 'अवयवादीत्यादिपदाद्गुण-कर्म्मपरिग्रहः, अवयवादिगतसाधारण-धर्म्मशून्ये इत्यर्थः, 'गुणादावित्यादिपदात् कर्म्मपरिग्रहः। ननु गुणे कर्म्मणि च सदृशाश्रयत्वादेव तत्प्रत्यय इत्यत आह, 'जातौ

**जातौ च सदृशप्रत्ययात्[१] विसदृशयोः करभ-रासभयोस्तत्सत्त्वाच्च । नापि धर्म्यन्तरे धर्म्यन्तरवृत्तिधर्मबाहुल्यम्, असाधारणधर्मशून्यत्वे सति तद्गतभूयोधर्मवत्त्वं वा, स्वनिष्ठात्यन्ताभावप्रतियोगिधर्मसमानाधिकरण-**

---

चेति, गुण-कर्म्मगतजातौ चेत्यर्थः । 'सदृशेति धर्म्मपरो निर्द्देशः, तथाच सदृशत्वप्रत्ययादित्यर्थः, क्वचित्तथैव पाठः । ननु जातौ तत्प्रत्ययस्य सदृशाश्रयकत्वमेव विषयइति यदुच्यते तदाप्याह, 'विसदृशयोरिति, विसदृशावयवादियुतयोरित्यर्थः, 'करभः' करिशिशुः, "करभः करिशावक इत्यमरकोषात् । तयोरवयवादीनामत्यन्तवैलक्षण्येऽपि रासभोऽयं करभ इव खादति इत्यादौ यत्किञ्चित्क्रियासाम्येऽपि सादृश्यव्यवहारात् भवन्मते तदनुपपत्तेः गुणादित्रयाणां साम्याभावादिति भावः । तथैवापरकल्पानपि दूषयति, 'नापीति, 'धर्म्यन्तरइति स्वभिन्ननिष्ठं स्ववृत्तिधर्म्मबाहुल्यमित्यर्थः, स्वभिन्ननिष्ठत्वञ्च स्वाश्रयाश्रयत्वसम्बन्धेन, स्वस्मिन् स्वसादृश्यवारणाय धर्म्मे स्वभिन्नवृत्तित्वनिवेशः । 'असाधारणेति तद्वृत्त्यसाधारणधर्म्मशून्यत्वे सति तद्गतभूयोधर्म्मवत्त्वमित्यर्थः, स्वस्मिन् स्वसादृश्यवारणाय सत्यन्तं । 'स्वनिष्ठेति, स्वस्मिन् स्वसादृश्यवारणाय धर्म्मे प्रतियोग्यन्तं । परस्परव्यधिकरणधर्म्माणां कुत्राप्यसत्त्वात् समानाधिकरणत्वं धर्म्मविशेषणं, तादृशयत्किञ्चिद्धर्म्मवत्त्वेऽपि सादृश्याव्यवहारात् भूयस्त्वनिवेशः । कल्प-

---

(१) सदृशत्वप्रत्ययादिति ख० ।

भूयोधर्मवत्त्वं वा, त्रिचतुःपञ्चादिभेदेन भूयस्त्वस्याननुगमात्[१]। न च कपिञ्जलवत्त्रित्वपर्य्यवसन्नं, विसदृशयोरपि हस्ति-मशकयोः सादृश्यप्रसङ्गात्। तदुक्तम्। "एवं जाति-गुण-द्रव्य-क्रियाशक्तिषु धर्मतः। एकैकद्वित्रिसाधर्म्म्यभेदादेकत्र चित्रता" इति॥ अथ व्यावर्त्तकधर्म्मापेक्षया तद्गतधर्मबाहुल्यं सादृश्यं,

---

त्रयमेकदैव दूषयति, 'त्रिचतुरित्यादि, 'अननुगमादिति। शङ्कते, 'न चेति, 'कपिञ्जलवदिति, "कपिञ्जलानालभेत" इति श्रुतौ बहुवचनस्य चतुष्ट्व-पञ्चत्वादिशक्तत्वे "मा हिंस्यात् सर्व्वाभूतानि" इति श्रुतौ विरोधभञ्जनाय भूतपदस्य कपिञ्जलातिरिक्तपरतया तत्रानेकभेदनिवेशे गौरवापत्तिरिति बहुवचनस्य त्रित्वे शक्तिरवश्योपेया तथाचापि भूयस्त्वं त्रित्वमेवेति भावः। 'प्रसङ्गादिति, शुण्डादिमत्त्वस्य मशकेऽपि सत्त्वादिति भावः। द्वित्रिधर्म्मसाम्येऽपि न सादृश्यमित्यत्र प्रमाणमाह, 'तदुक्तमिति, 'एवमित्यादि, 'एवं' भूयस्त्वस्य सादृश्यघटकत्वे, तथाच जात्यादिरूपस्वगतधर्म्मानपेक्ष्य एकैकद्वित्रिसाधर्म्यवैलक्षण्यात् यत्र तयोरेकस्मिन् वैलक्षण्यं तत्र न सादृश्यमिति भावः। शङ्कते, 'अथेति, 'व्यावर्त्तकेति असाधारणेत्यर्थः, 'तद्गतधर्म्मेति तद्गतसाधारणधर्म्मेत्यर्थः। ननु बाहुल्यस्याननुगमाल्लक्षणघटकत्वासम्भवः

---

(१) भूयस्त्वस्याननुगतत्वादिति ख०।

वाहुल्यञ्च त्रिचतुरादिष्वनुगतं, हस्ति-मशकयोस्तु बहु व्यावर्त्तकं साधारणन्त्वल्पमेत एव किञ्चिद्भेदाधिष्ठानं साहश्यमुच्यते इति चेत्, न, व्यावर्त्तकसमसङ्ख्येनाल्पे-नागणितेनापि धर्म्मेण सादृश्यव्यवहारात् ।

किञ्च सामान्यान्याश्रयभेदेनाभिन्नानि भवन्ति, साहश्यन्तु भिन्नम्, सामान्यं निष्प्रतियोगिकं तदनि-

---

इत्यत आह, 'वाहुल्यञ्चेति, 'अनुगतमिति, तथाच बहुत्वमिति व्यवहारविषयत्वमेव वाहुल्यमिति भावः । पूर्व्वलक्षणप्रसक्तातिप्रसङ्गं वारयति, 'हस्ति-मशकयोस्त्विति, 'व्यावर्त्तकमिति, हस्तित्व-मशकत्वादिरूपमिति शेषः, 'साधारणमिति, शुण्डवत्त्वादिरूपमिति शेषः । उपसंहरति, 'एत इति स्ववृत्त्यसाधारणधर्म्मापेक्षया बहु-त्वसाधारणधर्म्मा एवेत्यर्थः, 'किञ्चिद्भेदाधिष्ठानं' प्रतियोगिभेद-सहकृतं । तथाच तद्भिन्नत्वे सति स्ववृत्त्यसाधारणधर्म्मवहुत्वतद्गत-भूयोधर्म्मवत्त्वं तन्निरूपितस्वनिष्ठसादृश्यमिति पर्य्यवसितं । दूषयति, 'नेति, 'समसङ्ख्येनेत्यस्य 'धर्म्मेणेत्यत्रान्वयः, एवमग्रेऽपि । ननु गणनभ्रान्तिवशात्तत्र व्यवहार इत्यत-आह, 'अगणितेनापीति, 'व्यवहारादिति, तथाच अगणनस्थले वाहुल्याज्ञानात् त्वन्मते तद्व्य-वहारो न स्यादिति भावः । ननु व्यवहारविषयत्वरूपवाहुल्यं न गणनसापेक्षं संख्याया एव तत्सापेक्षत्वादिति यदि ब्रूयात्तदाप्याह, 'किञ्चेति, 'भिन्नमिति, 'प्रत्याश्रयमित्यादिः, तथाच सामान्यवि-

रूप्यञ्च। सादृश्यन्तु सप्रतियोगिकं तद्धीव्यङ्ग्यञ्च। अथ भेदे सति तद्गतभूयःसामान्यवत्त्वं सादृश्यं भेदश्च प्रत्याश्रयमन्यः सप्रतियोगिकश्चेति चेत्, तर्हि सादृश्यस्य भेदघटितत्वेन सावधित्वे तस्मात् सदृश इति स्यात् न तु तेन तस्य वा सदृश इति स्यात्। न च सादृश्यस्यापि सप्रतियोगिकत्वेन तस्मात् सदृश इति स्यात्, सावधौ हि तथा प्रतीति-प्रयोगौ न तु प्रतियोगिनि, अभावेऽपि घटादिति(१) प्रतीतिप्रसङ्गात्। अपि

---

रुद्धधर्मवत्त्वात् तद्भेदसिद्धा सामान्यरूपता तस्य न सम्भवतीति भावः। एवमग्रेऽपि, 'तदनिरूप्यञ्चेति यद्गतसामान्यं तदनिरूप्यञ्चेत्यर्थः, विरुद्धधर्मान्तरमपि दर्शयति, 'तद्धीव्यङ्ग्यञ्चेति, 'चकारात्तन्निरूप्यत्वसंग्रहः। शङ्कते, 'अथेति, इष्टापत्तिमाशङ्क्य निषेधति, 'न चेत्यादि, 'तथा' पञ्चम्यर्थविषयकेत्यर्थः, 'प्रयोगः' व्यवहारः, 'न त्विति न तु प्रतियोगिविषयकमात्रे पञ्चम्यर्थविषयकत्वमित्यर्थः। प्रतियोगित्वस्य पञ्चम्यर्थत्वे दोषान्तरमाह, 'अभावेऽपीति अत्यन्ताभावेऽपीत्यर्थः। अत्यन्ताभावविषयकप्रतीतेरपि पञ्चम्यर्थप्रतियोगित्वविषयकत्वापत्तेरिति यावत्। 'घटादितीति भूतले घटादभाव इति प्रतीतिप्रसङ्गादित्यर्थः। विशेषणांशमादाय दोषमुद्भाव्य विशे-

---

(१) घटाद्भेतीति ख०।

च तद्धर्मवत्त्वं यदि सादृश्यं तदा तत्-तद्भिन्नतयोः सङ्करः स्यात्[१] तद्धर्मवत्ता हि तत्ता तदन्या च तद्वत्ता, यदि च तत्रैव तद्वत्ता तदा तदेव तद्वदिति स्यात्। तथाच तद्धर्मवत्ताप्रत्यभिज्ञानवत् सोऽयमिति स्यात्, न तु तद्वदयमिति। एवं तद्वत्तैव हि तत्तेति गवयेऽपि गोबुद्धि-व्यपदेशौ स्याताम् गोगतसामान्ययोगित्वेन गोवत्तत्ता-

श्यांशमादायापि तमुद्भावयति, 'अपि चेति, 'तत्तद्भिन्नतयोः' तत्ता-तद्भिन्नतयोरित्यर्थः, द्वन्द्वात्पर इति न्यायात्, 'सङ्करः स्यात्' एक-त्रोभयसत्त्वं स्यात्, अत्र हेतुमाह, 'तद्धर्मेति तद्गतधर्मेत्यर्थः। सादृ-श्यस्यान्यरूपत्वे दोषमाह, 'तदन्येति भेदविशिष्टतद्गतधर्मवत्ताभिन्ना, 'तद्वत्ता' तत्सादृश्यं, 'तत्रैव' तत्रापि, 'तद्वत्ता' तत्सादृश्यं, तस्य भेदाघटितत्वादिति भावः। ननु तत्र तद्वत्तासत्त्वे का क्षतिरित्यत-आह, 'तदेति, 'तदेव' तदपि, 'इति स्यात्' इति व्यवहारः स्यात्। ननु तत्र तत्सत्त्वेऽपि व्यवहारनियामकोभेदोवक्तव्य इत्यत आह, 'तथा चेति तथोक्तौ चेत्यर्थः, क्वचिदेवं पाठः स एव सम्यक्। 'इति स्यात्' वस्तुगत्या सादृश्यवति इति प्रतीतिः स्यात्, आपत्ति-मुक्त्वा अनुपपत्तिमाह, 'न त्विति, 'तद्वदयमितीति, वस्तुगत्या सादृश्यवतीत्यादिः, 'इतीति इत्येवेत्यर्थः। तद्वत्तायास्तत्तारूपत्वे दोषमाह, 'एवमिति, कुत इत्याकाङ्क्षायामाह, 'गोगतेत्यादि, 'गोवत्तत्ताश्रयत्वात्' गोत्ववत्तायास्तत्तायास्त्वाश्रयत्वादित्यर्थः। पूर्वा-

(१) सङ्करप्रसङ्गादिति ख०।

**श्रयत्वात् न विशेषः प्रत्यक्षत्वात् । न समवायः वृत्ति-मत्त्वात्, इत्यधिकं(१) सादृश्यं ।**

**यत्तु सादृश्यं भावोऽभावो वा, भावोऽपि सगुणं निर्गुणं वा, निर्गुणमप्याश्रितमनाश्रितं वा, आश्रि-तमपि सामान्यवन्निःसामान्यं वा, सामान्यवत्त्वे स्पन्दो-ऽस्पन्दो वा, निर्गुणं निःसामान्यमाश्रितमेकाश्रितमने-**

---

कगुण-कर्मवृत्तित्वरूपहेतोरेव विशेषभेदसिद्धेः सामान्यभेदसाध-कहेतोरेव समवायभेदसिद्धेः सम्भवेन तदानीं न विशेषः न सम-वायइत्याद्यनुक्ता हेत्वन्तरेणापि तत्र विशेषादिभेदसिद्धिसम्भव-इत्यावेदनायैव इदानीं तमाह, 'न विशेष इति, 'प्रत्यक्षत्वात्' लौकिकप्रत्यक्षविषयत्वात्, 'वृत्तिमत्त्वात्' समवेतत्वात्, अत्र समवाय-पदं अभावोपलक्षकं, क्वचिन्न समवायादिरिति पाठः । 'अधिकं' सप्तपदार्थातिरिक्तं ।

परमतं निरसितुमुपन्यस्यति, 'यत्त्विति, 'भावः' भावरूपं, एवमग्रेऽपि, भावादिशब्दस्याजहल्लिङ्गत्वान्न नपुंसकत्वं । परविकल्पे आश्रितमित्यनन्तरं स्पन्दभिन्नं भावरूपमिति पूरणीयं, अन्यथा स्पन्दोऽस्पन्दो वा भावोऽभावो वेति विकल्पद्वयस्यानुत्तरत्वेन न्यूनता-पत्तेः । यद्यपि एकाश्रितमित्युत्तरेण परविकल्पस्यापि निवृत्तिः सम्भवति तथापि एकाश्रितमपि नित्यमनित्यं वा नित्यमपि प्रत्यक्ष-

---

(१) इत्यतिरिक्तमिति ख० ।

काश्रितं वा, इति यथायथं सप्तपदार्थान्तर्गतमिति । तन्न। व्यवहारानुपपत्त्या तद्बहिर्भावात् अन्यथैतादृशविकल्पेन सामान्य-विशेष-समवायानामपि द्रव्यादित्रयसाधर्म्यात्तत्तदन्तर्भावः(१) स्यादिति । उच्यते ।

---

मप्रत्यक्षं वा इत्यादिबहुविधविकल्पधाराया अनिवृत्तिः । 'यथायथं' यत्र यत्र यादृशं यादृशं सादृश्यं क्वचित् गुणरूपं क्वचित् क्रियारूपं द्रव्यरूपं सामान्यरूपमित्यर्थः, 'सप्तपदार्थान्तर्गतमिति, क्लृप्तपदार्थानां साधर्म्यनिश्चये विकल्पासम्भवादिति भावः । दूषयति, 'तन्नेति, 'व्यवहारानुपपत्त्या' तेन तस्य वा सादृश इति व्यवहारानुपपत्त्या इत्यर्थः, इदमुपलक्षणं तस्मात् सदृश इति व्यवहारापत्त्या इत्यपि बोध्यं । 'अन्यथा' प्रामाणिकव्यवहारमुल्लङ्घ्य विकल्पभयमात्रेण तस्य क्लृप्तपदार्थान्तर्गतत्वस्वीकारे, 'एतादृशविकल्पेन' सामान्यं भावोऽभावो वा इत्यादिविकल्पेन, 'सामान्य-विशेष-समवायानामपीति, अभावो भावोवेत्यादिविकल्पासम्भवादभावोनोक्तः, 'द्रव्यादित्रयसाधर्म्यात्' समवेतत्व-द्रव्यसमवेतत्वादिरूपतत्साधर्म्यात्, समवायस्यापि स्वरूपसम्बन्धरूपत्वेन समवेतत्वात्, 'तत्तदन्तर्भावः' द्रव्य-गुण-कर्मान्तर्भावः ।

एतावता मीमांसकमते निर्व्यूढे जरन्नैयायिकः स्वयमुत्तरयति, 'उच्यते इति, 'असाधारणान्येति असाधारणभिन्ना ये तद्गतभूयो-

---

(१) तदन्तर्गतत्वमिति ख० ।

असाधारणान्यतद्गतभूयोधर्म्मवत्त्वं तत्सादृश्यं । यज्-

धर्म्मास्तद्वत्त्वं, 'तत्सादृश्यं' तन्निरूपितसादृश्यं इत्यर्थः । अस्ति च गवये गोत्वादिरूपासाधारणधर्म्मभिन्ना ये गोनिष्ठशुक्लादिगुण-चलनादिरूपक्रिया-खुर-शृङ्गादिद्रव्यात्मकधर्म्मास्तद्वत्त्वात् गोनिरूपितसादृश्यं। स्वस्मिन् स्वसादृश्यवारणाय तद्वृत्त्यसाधारणधर्म्माभाववत्त्वे सतीति वक्तव्यं, असाधारणधर्म्मस्यापि भूयोऽन्तर्गतत्वेनासम्भव इति धर्म्मेऽसाधारणान्यत्वनिवेशः, असाधारणान्यत्वञ्च स्वावच्छिन्नभिन्नावृत्ति यत् स्वं तदन्यत्वे सति स्वाश्रयवृत्तित्वं वृत्तिमत्त्वं वा, विशेष्यदलाद्-वृत्तिव्युदासः, सत्यन्तव्यावृत्तिः स्फुटैव । वस्तुतस्तु अवृत्तेरसाधारणान्यत्वेऽपि न क्षतिस्तद्गतत्वाभावेन यावदन्तर्गतत्वाभावेनासम्भवाभावात् इति विशेष्यदलं नोपादेयमेव । न चास्य स्वत्वघटितत्वेनाननुगततया सादृश्यस्य दुर्ज्ञेयत्वमिति वाच्यं । स्वविशिष्टविशिष्टत्व-सम्बन्धेन किञ्चिद्धर्म्मविशिष्टान्यत्वे सति वृत्तिमत्त्वस्यैव तथात्वात् प्रथमवैशिष्ट्यं स्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन, द्वितीयवैशिष्ट्यञ्च वृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन, अवृत्तौ असाधारणान्यत्वव्यवहारवारणाय वृत्तिमत्त्वनिवेशः, प्रकृते तदनिवेशेऽपि न क्षतिरिति साम्प्रदायिकाः । तन्न । प्रमेयत्वादेरेव तथात्वेनातिप्रसङ्गापत्तेः ।

नव्यास्तु असाधारणोऽन्यो येभ्य इति व्युत्पत्त्या साधारणत्वलाभः, तत्पदं तद्धर्म्मावच्छिन्नपरं, एवमग्रेऽपि, तद्धर्म्मावच्छिन्नगतसाधारण-भूयोधर्म्मवत्त्वं तद्धर्म्मावच्छिन्ननिरूपितसादृश्यं, तद्धर्म्मावच्छिन्नसाधा-

जात्यादिसाधारणं भेदाघटिततया च निरवधि तद्गत-बहुधर्मवत्त्वं तन्निरूप्यमितीतरनिरूप्यत्वमेव तस्य सप्रतियोगिकत्वं, तत्रापि सादृश्ये तदेव सप्रतियोगिकत्वं, न तु भेददीर्घादिवत्सावधित्वं तस्मात् सदृश इति प्रत्ययापत्तेः। बहुत्वञ्च त्रिचतुरादिसाधारणमिति नाननु-

---

रणत्वञ्च तद्धर्मावच्छिन्नवृत्तित्वे सति तद्धर्मावच्छिन्नभिन्नवृत्तित्वं। न च स्वस्मिन् स्वसादृश्यापत्तिः, तद्धर्मावच्छिन्नभिन्ननिरूपितसादृश्यतावच्छेदकसम्बन्धेन भूयोधर्मवत्त्वस्य विवक्षितत्वात्। न च साधारणत्वनिवेशो व्यर्थः, भूयःपदस्य यावदर्थकत्वेनासम्भवापत्तेः। न चैवं 'भेदाघटितत्वाच्चेत्युत्तरग्रन्थासङ्गतिः,[१] प्रकारतया भेदाघटितत्वादिति तदर्थत्वात्, तदभिधानस्य तस्मात् सदृश इति व्यवहारवारणमात्रप्रयोजनकत्वादिति प्राञ्चः।

अपरे तु असाधारणः सादृश्यस्यासाधारणो धर्मो गवयादिः तदन्यश्चासौ स चेति कर्मधारयोत्तरतत्पुरुषः, स्वभिन्नतद्गतभूयोधर्मवत्त्वं स्वनिष्ठं तन्निरूपितसादृश्यमित्यर्थः, 'भेदाघटितत्वाच्चेत्यस्य तु प्रतियोगिभेदाघटितत्वादित्यर्थः, भूयस्त्वन्तु न यावत्त्वं किन्तु बहुत्वमेव, अतएव 'बहुत्वमित्युत्तरग्रन्थसङ्गतिरिति व्याचक्षते।

'निरवधि' अवधित्वानिरूपकं। ननु तस्य निरवधित्वे सप्रतियोगिकत्वमपि न स्यात् इत्यत आह, 'तद्गतेत्यादि, 'इतरेति

---

(१) 'भेदाघटिततया च' इत्यत्र 'भेदाघटितत्वाच्च' इति कस्यचिन्मूलपुस्तकस्य पाठमनुसृत्य टीकाकृतैतदुक्तमिति।

गमः। न चातिप्रसङ्गः, हस्ति-मशकयोरपि प्राणित्व-सुखित्व-दुःखित्वादिना[1] सादृश्यात्। अतएव वैसादृश्ये-ऽपि आह्लादजनकत्वादिना[2] चन्द्र इव मुखं पुष्ट्या-दिना[3] महिषीव गौरिति बह्वल्पतद्गतधर्मवत्त्वेन

सादृश्याश्रयेतरेत्यर्थः। एतेन गवादेरेव तन्निरूपकत्वं न तु गवया-देरित्यावेदितं, 'तव' मीमांसकस्य। ननु भूयस्त्वं बहुत्वमेव तच्च नानुगतं इति तस्य लक्षणघटकत्वासम्भवइत्यत आह, 'बहुत्वमिति, 'साधारणमिति, यत्किञ्चिद्बुद्धिविषयत्वरूपत्वात्तस्येति भावः। शङ्कते, 'न चेति, 'अतिप्रसङ्गः' हस्ति-मशकयोरपि सदृशत्वप्रसङ्गः, कुतः इत्याकाङ्क्षायामाह, 'हस्तीत्यादि, 'सादृश्यात्' सादृश्यस्य प्रामाणिकत्वात्। 'अतएव' तद्गतत्रिचतुरादिधर्मवत्त्वेऽपि सादृश्यस्य-प्रामाणिकत्वादेवेत्यर्थः, 'वैसादृश्येऽपि' तद्गतत्रिचतुराद्यतिरिक्तधर्मा-भावेऽपि, 'आह्लादजनकत्वादीत्यादिपदात् चाकचक्य-मण्डलाका-रत्वपरिग्रहः, पुष्ट्यादीत्यादिना बहुक्षीरत्व-पावनत्वपरिग्रहः, 'गौरि-तीति, व्यवहार इति शेषः। ननु भवन्मते सुसदृशत्व-मन्दसदृशत्व-व्यवहारः कथं स्यादित्यत आह, 'बह्वल्पेति, अल्पत्वं पञ्चत्वन्यूनवृत्ति-द्वित्वव्यापकसङ्ख्यावत्त्वं, सङ्ख्या च गुणरूपा विषयतारूपा वा इत्यन्य-देतत्, अत एकधर्मवत्त्वे पञ्च-षडादिधर्मवत्त्वे च न मन्दसादृश्यव्य-

(१) प्राणित्व-शरीरित्व-सुखित्वादिनेति ख०।

(२) आह्लादकत्वादिनेति ख०।

(३) बहुक्षीरत्वादिनेति ख०।

सुसदृशत्व-मन्दसदृशत्वम्। अतएव गवये गोसादृश्यं पृष्टः तद्धर्मवत्त्वमेव विवेचयति, वराहं गावोऽनुधावन्तीत्यत्र गोसादृश्यं वराहेऽप्युक्तम्। तद्धर्मवत्त्वेनोपमानोपमेयव्यवहारः काव्यादौ, साध्य-साधनवत्तामात्रेण दृष्टान्ते पक्षसादृश्यवाचकवति प्रयोगः परीक्षकाणाम्।

---

वहारः। सुसदृशत्वलक्षणे पञ्चत्वव्यापकसङ्ख्यावत्त्वं निवेश्यमिति विशेषलक्षणद्वयमिति भावः। 'अतएव' त्रि-चतुरादिधर्मवति सादृश्यसत्त्वादेव, अस्य वक्ष्यमाणप्रथमान्तत्रयेणान्वयः। 'अतएव' सादृश्यस्य तद्गतधर्मस्वरूपत्वादेव, इति केचित्। तन्मन्दं। 'वराहमित्यादिग्रन्थासङ्गतेः तस्य अल्पधर्मे सादृश्यत्वप्रतिपादकग्रन्थत्वेन सन्दर्भविरोधापत्तेः। 'गोसादृश्यं पृष्टः' गोसदृशः क इति जिज्ञासाविषयः पुरुषः, 'तद्धर्मवत्त्वं' गोगतधर्मवत्त्वं, 'विवेचयति' गणयति, 'वराहेऽप्युक्तमिति वननिष्ठत्व-चतुष्पदत्व-धावमानत्वसत्त्वात् इति भावः। 'तद्धर्मवत्त्वेन' तद्गतद्वित्रिधर्मवत्त्वेन, 'काव्यादाविति "अकस्मात् द्वेष्टि यो भक्तमाजन्मपरिसेवितं। न व्यञ्जनं कामयते त्याज्यो नृपइवातुरः" इत्यादौ धर्मद्वयेन, "प्रतापी बहुभिर्योगैर्युक्तो राजा भवानहं। इति मन्ये महाराज युग इन्द्र इव क्षितौ" इत्यादौ धर्मत्रयेण तद्व्यवहारः, 'साध्येत्यादि, 'मात्रपदेन धर्मान्तरव्यवच्छेदः, 'सादृश्यवाचकवति' उदाहरणात्मकवाक्ये, 'प्रयोगः', महानसवदित्यादिः, 'परीक्षकाणां' पण्डितानां।

**न चैते गौणाः, मुख्ये बाधकाभावात्। तस्मात् केनचिद्धर्म्मेण कस्यचित् क्वचित् सादृश्यवत्त्वमननुगतमस्ति। किञ्च यादृशबहुतद्धर्मवत्त्वज्ञानं सादृश्यव्यञ्जकं तदेव तद्व्यवहारनियामकमस्तु किमधिकेन। अन्यथा त्रिचतुरादित्वे तु व्यञ्जकमपि बहुधर्म्मवत्त्व-**

---

केचित्तु प्रतिवादिनि पुरुषे सदृष्टान्तोदाहरणवति सति स्वीयप्रतिज्ञादेः प्रयोगः। अन्यथा न्यूनत्वेनैव वादिनिग्रहात् प्रतिज्ञादिप्रयोगे तेषां वृत्तिरेव नोत्पद्यत इत्याहुः,।

'न चैत इति, 'एते' व्यवहाराः। सर्व्वज्ञस्य सर्व्वसदृशत्वापत्तिरूपदोषं पूर्व्वपक्ष्य तं स्वयं वारयति, 'तस्मादिति, 'अननुगतमिति, न तु प्रत्याश्रयमेकमित्यर्थः। ननु तद्गतभूयोधर्म्मवत्त्वरूपमपि सादृश्यं तद्गतयादृशधर्म्मवत्त्वज्ञानोत्तरमेव गृह्यते तदेव सदृशव्यवहारनिमित्तं सादृश्यमस्तु आवश्यकत्वादित्याशङ्कते, 'किञ्चेति, 'सादृश्यव्यञ्जकं' सादृश्यज्ञानजनकं, 'तदेव' तादृशधर्म्मवत्त्वमेव, 'तद्व्यवहारनियामकमिति तत्सादृश्यव्यवहारविषयतावच्छेदकं सादृश्यरूपमिति यावत्, 'किं अधिकेन' किं तादृशधर्म्मातिरिक्तधर्म्माणां सादृश्यघटकत्वेन, अनावश्यकत्वादित्यर्थः। 'अन्यथा' तादृशधर्म्मस्य सादृश्यरूपत्वाभावे, तस्येति शेषः, 'त्रिचतुरादित्वे' त्रिचतुरादिधर्म्मस्वरूपत्वे, 'बहुधर्म्मवत्त्वमिति व्यञ्ज्यानामनेकत्वे एकस्मिन् व्यञ्जकत्वं न सम्भवति व्यभिचारादिति तेषां प्रत्येकधर्म्मं प्रति एकैकस्य व्यञ्जकत्वमावश्यकमित्यभिप्रायः। ननु

मननुगतं स्यात्। व्यञ्जकमननुगतमपि वह्नौ प्रत्यक्षादिवदिति चेत्। न। तत्राभिव्यक्तीनां वैजात्यात् धूमालोकादौ वह्निव्याप्यत्वमेवानुगतम्। अत्रापि तद्व्याप्यत्वमस्तीति चेत्, तर्हि यादृशं तद्व्याप्यत्वं तदेव तद्व्यवहारनिमित्तं। न च तद्गतबहुधर्मवत्त्वं[१] न व्यञ्जक-

---

तथा सत्यपि का क्षतिरित्यत आह, 'अननुगतं स्यादिति, तथाच गौरवमिति भावः। ननु अनायत्या गौरवमपि स्वीकार्य्यं यथा धूमादीनामननुगमेऽपि तत्प्रत्यक्षादिकं वह्निव्यञ्जकं इत्याशङ्कते, 'व्यञ्जकमिति, अस्त्विति शेषः, अत्रैव दृष्टान्तमाह, 'वह्नाविति, तत्राननुगम एव नास्ति इति दृष्टान्तासिद्धिरित्याशङ्कते, 'तत्रेति, 'अभिव्यक्तीनां' व्यञ्जकानां धूमादीनां, अभि सर्व्वतोभावेन व्यक्तिर्ज्ञानं यस्मादिति व्युत्पत्तेः, 'वैजात्यात्' वैलक्षण्यात्, 'अनुगतमिति, तथाच तदेव धूमादीनामनुगमकं इति कुतो गौरवमिति भावः। इदञ्च तदन्यावृत्तित्वरूपव्याप्यत्वाभिप्रायेण व्यापकसामानाधिकरण्यरूपाया व्याप्तेर्हेतुतावच्छेदकभेदेन भिन्नत्वात्। 'अत्रापि' सादृश्येऽपि, 'तद्व्याप्यत्वं' सादृश्यव्याप्यत्वं, 'अस्ति' व्यञ्जकानुगमकमस्ति इत्यर्थः। मीमांसकः शङ्कते, 'तर्हीति, 'तदेव' सादृश्यव्याप्यत्वमेव, 'व्यवहारनिमित्तं' स्वाश्रयाश्रयत्वसम्बन्धेन व्यञ्जकविधया सादृश्यव्यवहारप्रयोजकं तदेव तद्व्यञ्जकमस्त्विति यावत्, 'तदेवेत्येवकारव्यवच्छेद्यं स्वयमाह, 'तद्गतेति, 'न व्यञ्जकं' न सादृश्यज्ञानजनकं, इति 'न चेति

---

(१) न तु तद्गतबहुधर्म्मवत्त्वज्ञानमिति ख०।

मेवानुभवविरोधात् तद्गतभूयोधर्मस्य बह्वल्पत्वज्ञानं विना सुसदृश-मन्दसदृशत्वज्ञानाभावाच्च । अथ तद्गत-बहुधर्मवत्त्वं न सप्रतियोगिकं सादृश्यन्तु न तथेति(१) व्यवहर्त्तव्यसाधकमिति चेत्, न, सादृश्यवत्तस्यापि स-प्रतियोगिकत्वात् ।

---

योजना । केचित्तु 'न चेति न त्वित्यर्थः, 'न व्यञ्जकमिति नकारो-भिन्नक्रमे, दूषयति, 'नेति, अर्थस्तु पूर्व्ववदित्याहुः । 'अनुभवविरो-धादिति, तथाच गवि तादृशवहुधर्म्मज्ञानोत्तरमेव गवये सादृश्य-ज्ञानं न त्वन्यदा इत्यनुभवादिति भावः । तादृशानुभवे विप्रतिपन्नं प्रत्याह, 'तद्गतेति, तथाच तद्गतधर्म्माणां बह्वल्पत्वज्ञानस्यावश्यकतया सादृश्यबोधकतया सादृश्यज्ञानात्पूर्व्वं तद्गतधर्म्मज्ञानमावश्यकमिति भावः । शङ्कते, 'अथेति, 'न तथा' न सप्रतियोगिकत्वाभाववत्त्वप्रति-योगिकमिति यावत्, 'इति' इत्येव, 'व्यवहर्त्तव्यसाधकं' अतिरिक्त-सादृश्यसाधकमित्यर्थः, दूषयति, 'नेति, 'सादृश्यवत्' भवन्मतसिद्धा-तिरिक्तसादृश्यवत्, 'तस्यापि' तद्गतबहुधर्म्मवत्त्वस्यापि, 'सप्रतियोगि-कत्वात्' तत्त्वेनानुभूयमानत्वात्, अनुभवापलापे तवापि तत्र तत्सि-द्धिर्न स्यादिति भावः ।

'यत्त्विति, 'तत्ता-तद्वत्तयोः' तत्ता-तत्सादृश्ययोः, 'सङ्करः स्यात्' एकत्र समावेशः स्यात्, तत्तायास्तद्गतधर्म्मवत्तारूपत्वादिति भावः ।

---

(१) सादृश्यन्तु तथेतीति ख० ।

यत्तु तत्ता-तद्वत्तयोः सङ्करः स्यादिति, तन्न, तत्रैव तद्धर्मवत्ता तदभेदो वा तत्ता सा च सोऽयमिति प्रत्यक्षज्ञाने भासते, भेदे भासमाने तदन्यस्मिन् तद्धर्मवत्ता तद्वत्ता यतो भवति तद्वदयं न तु स इति तयोर्भेदात्। नन्वेवं व्यक्त्यन्तरे गोत्वग्रहे तद्गोवदियमिति स्यान्न

---

दूषयति, 'तन्नेति, 'तत्रैवेति, 'एवकारोभिन्नक्रमे, 'तद्धर्मवत्तेति तद्गतधर्म्मवत्त्वेवेत्यर्थः, 'तत्तेतिपरेणान्वयः। ननु गोतत्ता गवयवृत्तिरिति व्यवहारः स्यादाधेयताया अनतिरिक्तत्वात् इत्यत आह, 'तदभेदो वेति, 'भासमान इति सतीति शेषः, अन्वयश्चास्य 'भवतीत्यनेन, 'भवति' व्यवह्रियमाणा भवतीत्यर्थः। 'इतीति 'यतो भवतीति पूर्व्वेणान्वयः। 'तयोरिति, अत इत्यादि।

केचित्तु 'इतिशब्दस्य काकाक्षिगोलकन्यायेन उभयत्रैवान्वय-इति अत इति न पूरणीयमित्याहुः। तन्न। एकस्य इतिशब्दस्य उभयार्थकत्वे सन्दर्भविरोधापत्तेः।

'तयोः' तत्ता-तद्वत्तयोः, 'भेदात्' अवश्याभ्युपेयभेदात्। नन्वेतन्मते सादृश्यस्य भेदाघटितत्वादिदमसङ्गतं इति चेत्, न, तस्य तद्भेदाघटितत्वेऽपि आश्रयभेदघटितत्वात्। न च तथापि तदन्यस्मिन्नित्यसङ्गतं, तस्य फलकथनरूपत्वात्। शङ्कते, 'नन्वेवमिति, 'एवं' उक्तरूपेण तयोर्भेदे, 'व्यक्त्यन्तर इत्यनेन तद्व्यक्तिभेदसत्त्वमावेदितं, तच गोत्वाग्रहे इष्टापत्तिसम्भवात् 'गोत्वग्रहे इति गोत्वनिश्चये इत्यर्थः, 'तद्गोवत्' तद्गोव्यक्त्यन्तरवत्, 'इयं' पुरोवर्त्तिव्यक्तिः, 'स्यादिति,

त्वियमपि गौरिति चेत्, न, गोत्वमात्रस्य तदन्यव्यक्ति-वृत्तित्वसमुच्चयात् एकत्र नानासम्बन्धानवगमात् । तद्गोवृत्तिबहुधर्मज्ञाने भवत्येव तद्गोवदियमिति ।

---

तत्र तद्गोभेदस्य तद्गतबहुधर्म्मवत्त्वस्य च सत्त्वात् इति भावः । आपत्तिमुक्त्वाऽनुपपत्तिमप्याह, 'न त्वियमपीति, 'गौरिति गवाभेदवतीत्यर्थः, 'स्यादिति पूर्व्वेणान्वयः, तत्ता-तद्भत्तयोर्विरुद्धत्वादिति भावः । शङ्कां निरस्यति, 'नेति, 'समुच्चयात्' ज्ञानात्, 'एकत्र' व्यक्त्यन्तररूपैकधर्म्मिणि, 'नानेति गोगतनानाधर्म्माणां, 'सम्बन्धानवगमात्' आश्रयत्वरूपसम्बन्धानवगमात्, तथाच तद्गतभूयोधर्म्मवत्त्वज्ञानाभावात् न तत्र तद्भत्ताप्रतीतिरिति भावः । नन्वेवं इयं तद्गोवदितिप्रतीतिः कदाचिदपि न स्यात् इत्यत आह, 'तद्गोवृत्तीत्यादि, तथाचेष्टापत्तिरिति भावः । इदमुपलक्षणं व्यक्त्यन्तरे तद्व्यक्तेः सादृश्यसत्त्वेऽपि

**तथाप्ययमपि शृङ्गादिमानिति समुच्चयधीः स्यात् न तु गोसदृश इति चेत्, न, एकत्रोभयसम्बन्धः समुच्चयोऽन्यगतभूयोधर्मवत्त्वमन्यत्र सादृश्यमिति विवेकात् ।**

---

रूपितविशेष्यताया अप्यैक्यान्नानाविशेष्यतानिरूपकत्वाभावेन न तस्य समूहालम्बनत्वमित्यभिप्रायः इति साम्प्रदायिका व्याचक्षते ।

ऋजवस्तु ननु सादृश्यस्यानेकधर्मरूपत्वे तज्ज्ञानं समुच्चयावगाहि स्यादित्याशङ्कते, 'तथाप्ययमपीति, 'समुच्चयधीः' समुच्चयावगाहिधीः, 'न तु गोसदृश इति नैकसम्बन्धावगाहि गोसदृश इति ज्ञानमित्यर्थः । 'एकत्र' एकस्मिन् धर्म्मिणि, 'उभयसम्बन्धः' अनेकसम्बन्धः, अन्यत्पूर्व्ववत् इत्याहुः, तच्चिन्त्यं ।

वस्तुतस्तु, ननु अत्यन्ताभाव-प्रतियोगिनोरिव भेद-प्रतियोगिगतधर्म्मयोरेकत्रावगाहि ज्ञानं आहार्य्यभिन्नं चेत् समुच्चयः इति सादृश्यस्य तद्भेदघटितत्वेन गोसदृश इति ज्ञानं समुच्चयरूपं स्यादिति तटस्थ-आशङ्कते, 'तथाप्ययमिति, 'न गोसदृश इति, समुच्चयानात्मकइत्यादिः । भेदावगाहिसमुच्चयोऽप्रसिद्ध इति न देश्यं, तस्याव्याप्यवृत्तितामते संयोगिभिन्नो वृक्षः संयोगवानित्यादेरिव प्रसिद्धत्वात् । समाधत्ते, 'एकत्रेति एकधर्म्मिणि भावाभावसम्बन्ध इत्यर्थः, तदवगाहित्वेन ज्ञानमपि तत्त्वेन व्यपदिश्यते इति भावः । 'अन्यगतेति गवयान्यगतेत्यर्थः, 'अन्यत्र' गवये, 'विवेकात्' विवेचितत्वात्, तथाच भेदो गवि पतितः तादृशधर्म्मवत्त्वन्तु गवये इत्येकधर्म्मिण्युभयानवगाहित्वेन कुतः समुच्चयत्वप्रसक्तिरिति भावं वयं युक्तं व्याचक्ष्महे ।

नवीनास्तु । विलक्षणसुखद्वये इतरसकलव्यावृत्तं सादृश्यमनुभूयते न तु तदुभयमात्रवृत्तिजातिरस्ति[१] तदुभयाभावे[२] जातेरनाश्रयत्वेनानित्यत्वप्रसङ्गात् । नापि जन्यं धर्मान्तरमस्तीत्यधिकं सादृश्यमुपेयं, तथापि

---

नव्यमीमांसकमतमुत्थाप्य दूषयति, 'नवीनास्त्विति, 'इतरसकलव्यावृत्तं' तादृशसुखसामान्यावृत्तीत्यर्थः, 'अनुभूयते' एतत्सुखसदृशं तत्सुखमित्यनुभूयते, लोकैरिति शेषः । तथाच तदुभयमात्रवृत्तिधर्म्माभावात् भवन्मते तत्र सादृश्यानुभवोऽनुपपन्न इति भावः । 'तदुभयाभावे' तदुभयनाशे, 'अनाश्रयत्वेन' स्वसमवायिरहितत्वेन, 'अनित्यत्वप्रसङ्गादिति, तथाच पुनस्तादृशसुखद्वये उत्पन्ने तादृशजातिरवश्योपेया अनेकसमवेतत्वाभावेन जातित्वमेव तस्या न स्यादित्याश्रयनाशादेव तन्नाशस्तदुत्पत्तौ तदुत्पत्तिरिति सुतरामनित्यत्वं इति भावः । न च प्रत्यये घटत्वादेरिव तादृशजातेरपि तदानीं कालसम्बन्धमात्रं पश्चात्तदुत्पत्तौ ताभ्यां सह तत्सम्बन्धोऽपि उत्पद्यते सम्बन्धस्यानित्यत्वे सम्बन्धिनोऽनित्यत्वमिति तु रिक्तं वचः मनःसम्बन्धादेस्तथात्वेऽपि मनःप्रभृतेरथात्वात् इति वाच्यं । मानाभावेन तत्कल्पनासम्भवादित्येव तत्त्वं । 'अधिकं' सप्तपदार्थातिरिक्तं, नव्यमतोपरि शङ्कते, 'तथापीति, 'समानधर्म्मवत्त्वं'

---

(१) तद्द्वयमात्रवृत्तिजातिरस्तीति ख० ।

(२) तद्द्वयाभाव इति ख० ।

तथाप्ययमपि शृङ्गादिमानिति समुच्चयधीः स्यात् न तु गोसदृश इति चेत्, न, एकत्रोभयसम्बन्धः समुच्चयोऽन्यगतभूयोधर्मवत्त्वमन्यत्र सादृश्यमिति विवेकात् ।

---

रूपितविशेष्यताया अप्यैक्यान्नानाविशेष्यतानिरूपकत्वाभावेन न तस्य समूहालम्बनत्वमित्यभिप्रायः इति साम्प्रदायिका व्याचक्षते ।

ऋजवस्तु ननु सादृश्यस्यानेकधर्म्मरूपत्वे तज्ज्ञानं समुच्चयावगाहि स्यादित्याशङ्कते, 'तथाप्ययमपीति, 'समुच्चयधीः' समुच्चयावगाहिधीः, 'न तु गोसदृश इति नैकसम्बन्धावगाहि गोसदृश इति ज्ञानमित्यर्थः । 'एकत्र' एकस्मिन् धर्म्मिणि, 'उभयसम्बन्धः' अनेकसम्बन्धः, अन्यत्पूर्व्ववत् इत्याहुः, तच्चिन्त्यं ।

वस्तुतस्तु, ननु अत्यन्ताभाव-प्रतियोगिनोरिव भेद-प्रतियोगिगतधर्म्मयोरेकत्रावगाहि ज्ञानं आहार्य्यभिन्नं चेत् समुच्चयः इति सादृश्यस्य तद्भेदघटितत्वेन गोसदृश इति ज्ञानं समुच्चयरूपं स्यादिति तटस्थ-आशङ्कते, 'तथाप्ययमिति, 'न गोसदृश इति, समुच्चयानात्मकइत्यादिः । भेदावगाहिसमुच्चयोऽप्रसिद्ध इति न देश्यं, तस्याव्याप्यवृत्तितामते संयोगिभिन्नो वृक्षः संयोगवानित्यादेरिव प्रसिद्धत्वात् । समाधत्ते, 'एकत्रेति एकधर्म्मिणि भावाभावसम्बन्ध इत्यर्थः, तदवगाहित्वेन ज्ञानमपि तत्त्वेन व्यपदिश्यते इति भावः । 'अन्यगतेति गवयान्यगतेत्यर्थः, 'अन्यत्र' गवये, 'विवेकात्' विवेचितत्वात्, तथाच भेदो गवि पतितः तादृशधर्म्मवत्त्वन्तु गवये इत्येकधर्म्मिण्युभयानवगाहित्वेन कुतः समुच्चयत्वप्रसक्तिरिति भावं वयं युक्तं व्याचक्ष्महे ।

